गीर्वाणवाचि सततं नवनवमीदृक् स्तुतीरहं रचयन् ।
रुचिरोपयन्तृमुनिवरसेवाहेवाकभरित एव स्याम् ॥ ९ ॥
स्यामपि चेदिह दशमीं दशामनुप्राप्त ईषदपि चित्तम् ।
श्रीमद्वरवरयोगिध्यानदरिद्रं न जातु मम भवतु ॥ १० ॥
तुष्यन्विवेकरेकादशीतिपाठीति $ केवलं विप्रः ।
यदि वरमुनीन्द्रफणितिषु वैदुष्यमियात्तदा स सर्वज्ञः ॥११॥
ज्ञानाधिकैकभोग्यास्सूक्तीर्वरयोगिविरचिताः पठताम् ।
परिपूर्णपारणा स्यात् तेषां द्वादश्यहो तिथिस्सकला ॥१२॥
लक्ष्मीपतेर्नियोगात् द्वादश जाता हि दिव्यसूरिवराः ।
अथ च त्रयोदशीयं मूर्तिर्वरयोगिरूपिणी रेजे ॥ १३ ॥
जेजेतु नाथमुनितश्चतुर्दशीमत्र जगति गुरुपीठीम् ।
योऽलंकृत्य विलक्षणकीर्तिर्विरराज स वरवरयोगी ॥१४॥
गीर्भिरमृतोपमाभिः कलानिधेरस्य वरवरस्य मुनेः ।
ध्वस्ततिमिरा धरित्री सततञ्च विभाति पौर्णमासीव ॥१५॥
वर्धयितुमिह यतीश्वर § दर्शनमतिमात्रमुत्सुकास्सुधियः ।
श्रीमद्वरवरयोगिव्याख्यास्वेव क्षिपन्तु निजमायुः ॥ १६ ॥
श्रीमद्वरवरमुनिवरगुणगणविख्यापनार्थतिथिमालाम् ।
अनिशं पठतामतिथीन् सत्कर्तुमपारमुद्भवेद्द्रविणम् ॥

---

$ अशीतिपाठीति प्रसिद्धिः कृष्णयजुर्वेदपूर्णाध्यायिनाम् । विवेकरेकात् तुष्यन् = विवेकविरहेण वेदाध्ययनमात्रतस्तृप्त इति यावत् ।

§ दर्श इति अमावास्यासूचनम् ।

श्रीवैष्णवसौभाग्ये

# ॥ श्रीवरवरमुनिपक्षमाला ॥

---

युगलं वरमुनिपदयोस्सततं हृदये विचिन्तयेयुर्ये ।
यशसा जगदिदमखिलं शुक्लयितुं ते ध्रुवं प्रवीणास्स्युः ॥
स्यूतां वरवरमुनिवरशुभगुणमुक्ताफलैरिमां मालाम् ।
कलयत सदैव कण्ठे कृष्णो भगवान् शुभानि वितरेद्वः ॥

पक्षमालामिमां वाचि शिक्षमाणेषु सादरम् ।
पक्षपाती भवेद्विष्णुः वक्षसा चाद्रियेत तान् ॥

---

श्रीवैष्णवसौभाग्ये

# ॥ श्रीवरवरमुनि माममाला ॥

(ककाराद्यक्षरानुपूर्वी प्रायशः)

---

कलानामेष ¶ सर्वासां निधिर्वरवरो मुनिः ।
करोतु सततं वासं कृपया मम मानसे ॥ १ ॥

खलानां दमनायैव कलयन्नुदयं भुवि ।
वरयोगीश्वरस्स्वामी वर्धतां पुरुषर्षभः ॥ २ ॥

---

¶ मेषराश्यादिनिर्देशः क्रमेण द्रष्टव्यः ।

गतिरेष फणीन्द्रो नः यो दिव्यमिथुनाज्ञया ।
रम्यजामातृयोगीन्द्ररूपी रक्षितवान् भुवम् ॥ ३ ॥

चरन्तु वक्रगतयः¶ कर्कटा इव केचन ।
कान्तोपयन्तृभक्तानामार्जवं भुवि विश्रुतम् ॥ ४ ॥

जन्ममृत्युजराव्याधिभीतिग्रस्ता नरा इह ।
श्रीरम्ययोगिसिंहस्य करुणामेव वृण्वताम् ॥ ५ ॥

झरीं कवेरकन्याया अपि मन्दयितुं क्षमैः ।
सूक्तिवृन्दैः पुनन् भूमिं वरयोगी विजृम्भताम् ॥ ६ ॥

तनोतु वरयोगीन्द्रः करुणामतुलां मयि ।
आचार्यहृदयार्थानामवबोधनसिद्धये ॥ ७ ॥

दारुणा वृश्चिकप्राया ये भुवं क्षोभयन्ति ते ।
कान्तोपयन्तृयोगीन्द्रसूक्तिभिर्यान्तु शिक्षणम् ॥ ८ ॥

धनुषा भगवान् शत्रून् विजिगाय किमद्भुतम् ।
गुरुर्वरवरो रम्यैः गुणैरेवाजयन्महीम् ॥ ९ ॥

परं धामकरग्राह्यं कर्तुं व्यवसितो हरिः ।
श्रीरम्यवरयोगीन्द्रमवातीतरदादरात् ॥ १० ॥

भगवान् कुम्भसम्भूतिः पाराशर्यः पराशरः ।
इत्यादिभ्यो मुनिभ्योऽपि श्रेयान्वरवरो मुनिः ॥ ११ ॥

---

¶ कर्कटे कुटिला गतिः ।

ये पठन्ति महायोगिमाससमालामिमां मुदा ।
अमी न जातुचिद्दुःखम् अवाप्स्यन्ति मनागपि ॥ १२ ॥

---

श्रीवैष्णवसौभाग्ये

# ॥ श्रीवरवरमुन्यृतुमाला ॥

---

सदैव सन्तो वरयोगिपादद्वन्द्वैकचिन्तानिरता मदीये ।
चित्ते वसन्तो मुदमद्वितीयां सम्पादयन्तां नियतं दयन्ताम् ॥

हाहा भवग्रीष्मविशेषतप्ताः सद्यो विहातुं सकलांश्च तापान् ।
श्रीरम्ययोगीन्द्रपदाम्बुजन्मच्छायामुपाश्रित्य भवन्तु हृष्टाः ॥२॥

श्रीमच्छठारातियतीन्द्रमुख्यप्राचीनसूरीन्द्रगणावतारः ।
श्रीरम्यजामातृमुनीश्वरोऽयं वर्षायुतं जीवतु भक्तभोग्यः ॥३॥

श्रीमद्वचोभूषणदिव्यसूक्तिव्याख्यादिविख्यापितवैभवाब्धिः ।
श्रीमद्यतीन्द्रप्रवणो मुनीन्द्रः जेजेतु भूमौ शरदस्सहस्रम् ॥ ४ ॥

योगीन्द्र ! हे मन्तरि § मन्त्रराजं नित्यं त्वदीयं मयि दासदासे ।
श्रेयांसि भूयांसि तरङ्गयेथाः कारुण्यवातोत्थकटाक्षपूरैः ॥ ५ ॥

---

§ हे योगीन्द्र त्वदीयं मन्त्रराजं मन्तरि मयि = त्वदीयमन्त्रनित्यमनन-निरते मयीति यावत् ।

कारुण्यपूरैः शिशिरान्तरङ्गः कान्तोपयन्ता मुनिसार्वभौमः ।
एवं सदा मां स्वगुणावलीनां सङ्कीर्तनैकोत्सुकमातनोतु ॥ ६ ॥

इत्थमृतुमालिकास्तुतिमभिराममुनीन्द्रगुणमयीं पठताम् ।
अण्णङ्गरार्यरचितामनुकलमनवद्यधीर्विजृम्भेत ॥

---

श्रीवैष्णवसौभाग्ये

॥ श्रीवरवरमुन्ययनमाला ॥

---

भवाब्धिसन्तारणदक्षिणानि श्रीसूक्तिरत्नान्यमृतोपमानि ।
संदत्तवान् कान्तवरोपयन्ता योगीश्वरो मे न जहाति चित्तम् ॥

सर्वोत्तरश्रीशठवैरिवाचां स्वादिष्टमर्थं समयेऽनुगृह्णन् ।
रङ्गाधिराजादुपलब्धपद्यो रम्योपयन्ता मुनिरेव दैवम् ॥ २ ॥

अयननाम निवेश्य कृतामिमां वरमुनीन्द्रनुतिं हृदि कुर्वताम् ।
अयनमुत्तममच्युत आदरात् वितरतीह परत्र च पश्यत ॥ ३ ॥

---

एकस्मिन्नेव श्लोके युगचतुष्टयनामनिवेशन-

सनाथमिदं पद्यम् ॥

कृतं भूयः पापं प्रति किमिति चिन्ता भवति वः
कलत्रे ताते वा तनय उत बन्धुष्वपि पुनः ।

विरक्तया मद्वाक्ये रुचिरिह भवेद्वा परमतः¶
कलिध्वान्तध्वंसी वरवरमुनिर्वो ध्रुवमवेत् ॥

---

श्रीवैष्णवसौभाग्ये

# ॥ श्रीवरवरमुनिसंवत्सरमाला ॥

अस्मिन् स्तोत्रे नियमद्वयमङ्गीकृतम् ।
संवत्सरनाम्नां पद्योपक्रम एव विन्यासः,
प्रतिपद्यं पद्यारम्भविन्यस्तवर्णस्यैव प्रतिपादोपक्रमं विन्यासश्च ।

प्रभवो बहवस्सन्ति प्रसिद्धा भुवि सन्तु ते ।
प्रज्ञानिधिर्वरो योगी प्रभुरेको विवेकिनाम् ॥ १ ॥

विभवान्विविधान् सद्भ्यः वितरीतुं प्रकल्पते ।
विशिष्य वरयोगीन्द्रविभवध्यानवासना ॥ २ ॥

शुक्लपक्षेन्दुवन्नित्यं शुद्धसत्त्वं प्रवर्धते ।
शुभ्रां रम्यमुनेर्मूर्तिं शुद्धे मनसि भेजुषाम् ॥ ३ ॥

प्रमोदोऽतनुरस्माकं प्रवृद्धिं हृदि विन्दति ।
प्रसिद्धवरयोगीन्द्रप्रभावध्यानहेतुना ॥ ४ ॥

प्रजोत्पत्तिकृतौ नित्यं प्रवीणो विष्णुरस्तु सः ।
प्रजातानां प्रबोधार्थं प्रजज्ञेऽसौ वरो मुनिः ॥ ५ ॥

---

¶ परमतः = अतः परमिति यावत् ।

$ आङ्गीरसकृदानन्दमावहन्तीर्महस्वतीः ।
आविष्कुर्वन्ममैवान्तरातिष्ठति वरो मुनिः ॥ ६ ॥
श्रीमुखाम्भोजनिर्गच्छच्छ्रीसूक्त्यमृतवर्षणैः ।
श्रीवैष्णवमतोद्धर्ता श्रीरम्यमुनिरेधताम् ॥ ७ ॥

विक्रम वान्ति विश्राणा विद्वांसोऽपि ह्यसूयया ।
विह्वला वरयोगीन्द्रविभवापह्नवोत्सुकाः ॥ १४ ॥
वृषभं मुनिवर्याणां वृद्धं विज्ञानिनां सताम् ।
वृणोमि वरयोगीन्द्रं वृजिनानां प्रशान्तये ॥ १५ ॥

('विषु' इति वत्सरनामपक्षे पद्यान्तरम् ।)

विष्वग्व्यापियशःकायविशेषेण विभासुरः ।
विमलो वरयोगीन्द्रः विजयेत शतं समाः ॥ १५ ॥
चित्रभानुलसद्भूषश्चिरमग्रेऽस्तु मे हरिः ।
चिन्तयेयमहंत्वेकं चिन्ताभोग्यं वरं मुनिम् ॥ १६ ॥
स्वभानुभिस्तमो बाह्यं स्वतो हन्ति दिवाकरः ।
स्वादुसूक्तिर्महायोगी स्वगीर्भिस्त्वान्तरं तमः ॥ १७ ॥
तारणो भववाराशेः तारकेशसमाननः ।
तापहृद्वरयोगीन्द्रः तामसीं मे मतिं हतात् ॥ १८ ॥
पार्थिवान् धनदर्पाढ्यान् पामरान् प्रति गन्तृभिः ।
पावनं वरयोगीन्द्रपादाब्जमभिगम्यताम् ॥ १९ ॥
व्ययं वाचां वितन्वन्ति व्यर्थमेव बुधा अपि ।
व्यथां वरमुनिस्तोत्रैर्व्यपोहन्तु विवेकिनः ॥ २० ॥
सर्वजिद्भगवान्विष्णुः स हि रङ्गेश्वरात्मना ।
सच्छिष्यो वरयोगीन्द्रे सन् कृतार्थो विराजते ॥ २१ ॥

सर्वधारी हरिस्साक्षात् स एवेति न मन्महे ।
सर्वज्ञो वरयोगी हि सर्वाधारः स्वसूक्तिभिः ॥ २२ ॥

विरोधीति कमप्यस्यां विपुलायामभावयन् ।
विख्यातो वरयोगीन्द्रो विलक्षणगुरूत्तमः ॥ २३ ॥

विकृतिं यान्ति भूयांसो विषयग्रामवीक्षणैः ।
विकृता वरयोगीन्द्रविशदोक्तिभरैर्वयम् ॥ २४ ॥

खरा इव विवेकान्धाः खलाः केचिदसूयया ।
खलु निन्दन्ति योगीन्द्रं खर्वेतरमदोल्बणाः ॥ २५ ॥

नन्दनन्दन कृष्णेति नामोक्तीरहमुत्सृजन् ।
नन्देयं वरयोगीन्द्रनामध्यानैकनिष्ठया ॥ २६ ॥

विजयो विपुलस्तेषां विख्यातिश्च विसृत्वरी ।
विश्रुतान्वरयोगीन्द्रविभवान् ये विवृण्वते ॥ २७ ॥

जय एव भवेन्नित्यं जगत्यां न पराजयः ।
जय रम्योपयन्त्रार्य ! जयेत्येव प्रघुष्यताम् ॥ २८ ॥

मन्मथाज्ञाभटाः प्रायो मर्त्या माद्यन्ति संसृतौ ।
महायोगिमहिष्ठोक्तिमधुपानमदस्तु मे ॥ २९ ॥

दुर्मुखीति प्रसिद्धानां दुष्टानां सेवनैरलम् ।
दुःखं त्यजत योगीन्द्रदुग्धसोदरसूक्तिभिः ॥ ३० ॥

हे विलम्बितुमर्हं न हेयोपादेयवेदिनः ! ।
हेलयैव महायोगिहेमपादाम्बुजं स्तुत ॥ ३१ ॥

विलम्बिकुण्डलोल्लासिविशुद्धमुखपङ्कजः ।
विष्णुस्तिष्ठतु दूरे मे विष्वग्वरमुनीक्षितुः ॥ ३२ ॥

विकारिता तु हेयेति विद्वांसोऽपि विदन्त्यहो ।
विकारो वरयोगीन्द्रविभवध्यानजोऽनघः ॥ ३३ ॥

‡ शार्वरीशप्रभाजिष्णुशान्तमूर्तेस्सदुक्तिभिः ।
शाम्यन्त्यघानि नः क्षान्तिशालिनो वरयोगिनः ॥ ३४ ॥

प्लवालाभात् सदा चोपप्लवखिन्ना भवाम्बुधौ ।
प्लवं वरमुनीन्द्राङ्घ्रिपल्लवं वृण्वतां दृढम् ॥ ३५ ॥

शुभकृत्प्रथितो विष्णुः शुभं किमपि नाकरोत् ।
शुशुभे रम्ययोगीन्द्रः शुभकारी स्वसूक्तिभिः ॥ ३६ ॥

$ शोफकृत्तामसाहारैः शोचनीयदशां गताः ।
शोधयन्तु मुनीन्द्राङ्घ्रिशोभाध्यानैर्निजां तनूम् ॥ ३७ ॥

क्रोधी जनो वृथैवात्र क्रोशतीर्ष्यावशंवदः ।
क्रोधकामादिविध्वंसकोविदे वरयोगिनि ॥ ३८ ॥

विश्वा वसुमती तेषां विशेषेण वशंवदा ।
विदतां रम्यजामातृविभवानखिलानपि ॥ ३९ ॥

---

‡ शर्वरीशः = चन्द्रः तदुपरि सम्बन्धार्थे अण् ; आदिवृद्धिः.

$ शोफः स्थौल्यम् । (தடிப்பு) शरीरस्थौल्यसंपादकतामसाहार-स्वीकरणेन * ஊன்மல்கிமோடுபருத்திருப்பார்.

पराभवः कदाऽप्यस्मान् परत्रात्र च न स्पृशेत् ।
पवित्रवरयोगीन्द्रपदपङ्कजसेविनः ॥ ४० ॥

प्लवं गवेषमाणा ये प्लवन्ते भवसागरे ।
प्लवं वरमुनिं प्राप्य प्लवगा इव यान्तु ते ॥ ४१ ॥

¶ कीलकोत्पाटनोद्युक्तकीशन्यायेन पामराः ।
कीर्तिं वरमुनीन्द्रस्य कियन्तो दूषयन्त्यहो ॥ ४२ ॥

† सौम्यजामातृभगवान् सौम्यजामातृयोगिनः ।
सौम्यसूक्तिततीः श्रुत्वा सौम्यं पद्यं व्यजिज्ञपत् ॥ ४३ ॥

साधारणाह्वये वर्षे साक्षाद्रामानुजो मुनिः ।
साधु संरक्षितुं भूयः साधून्वरमुनिर्बभौ ॥ ४४ ॥

विरोधि कृत्स्नं दुर्ध्वान्तं विध्वंसयितुमुद्यतः ।
विलक्षणो रविर्जज्ञे विशदोक्तिर्वरो मुनिः ॥ ४५ ॥

परिधावी मुहुर्जन्मपर्यायेष्वेष पामरः ।
पश्यन्वरमुनीन्द्रस्य पदपद्मं प्रमोदते ॥ ४६ ॥

प्रमादी चरताज्जन्तुः प्रलयावधि संसृतौ ।
प्रभजेद्वरयोगीन्द्रप्रवणश्चेत्परां मुदम् ॥ ४७ ॥

---

¶ कीलोत्पाटीव वानर इतीदं स्मर्तव्यमिह; दूषणप्रवृत्तिः **स्वेषामेव** अपायसंपादनक्षमेत्युक्तं भवति ।

† श्रीसौम्यजामातृभगवान्—श्रीरङ्गनाथः । அழகியமணவாளன்.



श्रीवैष्णवसौभाग्ये

# ॥ श्रीवरवरमुनि सहस्रनामस्तोत्रम् ॥

---

लक्ष्मीनाथसहस्रनामरचनासंसक्तचित्तं तु मां
लक्ष्मीशस्स हरिः स्वयं करुणया स्वप्ने समाजग्मिवान् ।
श्रीमत्सुन्दरयोगिवर्यविषये स्तोत्रं कुरुष्वैतदि-
त्याज्ञाप्यान्तरधात्ततो वरमुनिं स्तौमीदृशस्तोत्रतः ॥

எம்பெருமான் விஷயமாக "அத்புத ஸஹஸ்ரநாமம்" என்று ஒரு ஸ்துதி யியற்றத் தொடங்கினேனடியேன். அதில் அத்புதமாவது என்னென்னில், ஒவ்வொரு திருநாமத்திலும் முடிந்த சொல்லையே (அல்லது எழுத்தையே) அடுத்த திருநாமத்தின் முதலாக அமைப்பது. இங்ஙனே எண்பது திருநாமங்கள் வரையில் இயற்றினேன். அவை வருமாறு :—

सर्वश्रुतिततिस्तुत्यः स्तुत्यमाहात्म्यशेवधिः ।
शेवधीभूतपादाब्जः पादाब्जाश्रितशोकहा ॥
शोकहारिनिजध्यानो ध्याननिष्णातसुग्रहः ।
ग्रहपीडादिसर्वार्तिसमूलोन्मूलनक्षमः ॥
क्षमादिसद्गुणाम्भोधिरम्भोधिशयनोत्सुकः ।
उत्सुकानन्तसद्भक्तहृत्सुखाधानतत्परः ॥

परमात्माऽऽत्मपादाब्जप्रणताशेषदैवतः ।
दैवतौघशिरोधार्यपादाब्जोऽब्जविलोचनः ॥
लोचनातिथिसद्भक्तमोचनोत्सुकमानसः ।
मानसैकनिधानार्हमहनीयशुभाश्रयः ॥
आश्रयाकांक्षिदेवेन्द्राद्याश्रितः श्रितमुक्तिदः ।
मुक्तिदानैकविख्यातः ख्यातसद्गुणसागरः ॥
सागरोन्मथनोद्धर्षी हर्षिताशेषसज्जनः ।
सज्जनस्वान्तनिलयो लयसर्गादिकारणम् ॥
रणशूरो रमानाथोऽनाथरक्षाविचक्षणः ।
क्षणनिर्लूनसर्वाघो घनसंनिभसद्वपुः ॥
पुष्कराक्षः क्षमाशाली लीलामानुषविग्रहः ।
हतराक्षसदैत्यौघो घनसंनिभविग्रहः ॥
हनूमद्भक्तिसंतुष्टः तुष्टषद्भक्तिवर्धनः ।
नक्राक्रान्तगजत्राता तापविध्वंसनोदयः ॥
यमसंयमनिष्णातमुनिप्रत्यक्षगोचरः ।
रक्षिताशेषभुवनो नमज्जनभवान्तकः ॥
कमलास्तनकस्तूरीकर्दमाङ्कितविग्रहः ।

இவ்வண்ணமாக இயற்றிக்கொண்டு செல்லுகையில் அன்றிரவு எம்பெருமான் பேரருள்பொலியக் கனவிலே காட்சி தந்து "என் விஷயமான ஸஹஸ்ரநாம ஸ்துதிகள் பல இருப்பதால் மணவாள மாமுனிகள் விஷயமாக ஒரு ஸஹஸ்ரநாமம் இயற்றுவாயாக" என்று நியமித்து

அந்தர்த்தான மடைந்த அதிசயம் வாசாமகோசரம். இது ஒரு யாத்திரையில் (பெஜவாடாவில்) கிருஷ்ணாநதி தீரத்தில் நேர்ந்த ஸம்பவம். அந்த நியமனத்தை சிரஸா வஹித்து உடனே துயிலெழுந்து இந்த ஸ்ரீமத் வரவர முநி ஸஹஸ்ரநாமஸ்தோத்ரமியற்ற ஆரம்பித்து அன்றே தலைக்கட்டினேன். எம்பெருமானின்னருளும் மாமுனி களின் மஹாக்ருபையும் மிக வியக்கத்தக்கதாயிருந்தது.

---

श्रीमान् सुन्दरजामातृमुनिस्स्वयमिसत्तमः ।
पर्यायभाष्यकृद्भोगिराजांशो भद्रवाक्प्रदः ॥
काषायवासाः कान्तोपयन्तृयोगी कलानिधिः ।
कांक्षिताशेषफलदः (१०) कामक्रोधविनाशनः ॥
यज्ञसूत्राञ्चितोरस्कः शिखाशेखरशोभनः ।
घोरसंसारकान्तारश्रान्तविश्रान्तिपादपः ॥
स्वपादाब्जसमासक्तभक्तसंतारणव्रती ।
कुदृष्टिध्वान्तमार्ताण्डः कुत्सितार्थनिषूदनः ॥
कुदृष्टिकुहनाच्छेत्ता कुदृष्टिमतमर्दनः ।
आर्जवैकान्तनिलयो (२०) भक्तवात्सल्यवारिधिः ॥
कौटिल्यदूरगस्सौम्यः सुन्दरास्यस्सुधीमणिः ।
अभिजातपदाम्भोजो नलिनायतलोचनः ॥
पुलकाञ्चितदिव्याङ्गः पुरुषोत्तमसेवनः ।
सर्वोपनिषदर्थज्ञः (३०) सर्ववेदार्थवित्तमः ॥

सर्वोपबृंहणाभिज्ञोऽभिज्ञशिष्यसमन्वितः ।
अष्टदिग्गजसच्छिष्याभिष्टतोऽभीष्टपोषणः ॥

वानाचलमहायोगिवदनाम्भोजभास्करः ।
वाधूलदेशिकाद्युक्तस्तोत्रसंक्षिप्तवैभवः ॥
वादिभीतिकराचार्यवाग्विख्यापितवैभवः ।
भगवद्भक्तभक्ताग्र्यो गुणश्रीताभिपूजितः ॥ ॥ ४० ॥
वैराग्यशेवधिश्शिष्टाग्रेसरश्शेमुषीनिधिः ।
नैसर्गिकमहाभक्तिर्नैष्ठिकोऽनिष्टनाशनः ॥

श्रीशैलेशार्यसच्छिष्यश्शेषांशो ज्ञानशेवधिः ।
महायोगी (५०) महाप्राज्ञो महाभक्तो महामतिः ॥

श्रीरामानुजसिद्धान्तनिर्धारणधुरन्धरः ।
लोकाचार्यमहासूक्तिव्याख्याविख्यातवैभवः ॥

श्रीकासारादियोगीन्द्रदिव्यसूक्त्यभिवर्धनः ।
अविद्याध्वान्तसंहर्ता विश्वविद्याविशारदः ॥

अन्यथाज्ञानविध्वंसी * मन्युवैदेशिको (६०) महान् ।
अभिरामवराभिख्योऽनसूयुरनघश्शुचिः ॥

अव्याजकरुणासिन्धुरार्तबन्धुरमेयधीः ।
अत्याश्चर्यवचोदाता दान्तिशान्त्यादिशेवधिः ॥ ॥ ७० ॥

---

* கோபமென்பது இருக்குமிடமே தெரியாதவர்.

निरवद्यमहाविद्यो निष्कल्मषमहामनाः ।
आचार्यहृदयव्याख्याविख्यातविमलप्रथः ॥

आचार्यचरणद्वंद्वविन्यस्तात्मभरस्सुखी ।
आजानुबाहुराचार्यशिखामणिरनर्घधीः ॥

आपीतसर्वशास्त्राब्धिरमोघकरुणोल्बणः । ॥ ८० ॥
अप्रमेयमहाप्रज्ञः प्राज्ञबृन्दोपसेवितः ॥

अपारभववाराशिशोषणक्षमसूक्तिदः ।
तापत्रयमहाम्भोधिसंतारणविचक्षणः ॥

अपार्थबृन्दविच्छेत्ता सदर्थाम्भोधिचंद्रमाः ।
अवदातसुजाताङ्गोऽनङ्गक्रोधविदूरगः ॥

अकम्पनीयसद्भक्तिरकुण्ठोदारवैभवः । ॥ ९० ॥
अकल्मषमहासूक्तिरनिर्वाच्यकृपानिधिः ॥

अकृत्रिमहरिप्रेमा प्रेमवर्धनवाक्ततिः ।
अगाधभगवद्भक्तिसिन्धुरव्याजबान्धवः ॥

दिव्यसूक्तिसुधास्वादी * नव्यनव्यगुणप्रथः ।
हव्यवाहसहक्तेजाः भव्यदायिवचस्ततिः ॥ ॥ १०० ॥

गद्यपद्यावलीस्तुत्यो हृद्यचारित्रभूषितः ।
विद्यमानशुभख्यातिः सद्यतिश्रेष्ठवन्दितः ॥

---

* அப்பொழுதைக்கப்பொழுதென்னாரவமுதமென்கை.

खिद्यमानजनत्राता छिद्यमानार्थसंशयः ।
भिद्यमानभवग्रन्थिः अद्यमानशठारिवाक् ॥

* इन्द्रजिद्बधविख्यातश्चन्द्रकान्ताननप्रभः । ॥ ११० ॥
मन्त्रराजार्थमन्दारो मन्त्ररत्नार्थवर्षुकः ॥

अहङ्कारविदूरस्थो ममकारविदेशगः ।
हुङ्कारोद्धूतदुर्ध्वान्तः त्वंकारज्ञानदुर्विधः ॥

सत्पदाम्भोजसक्तात्मा सत्पवित्रकथारतः ।
हृत्परिज्ञानकुशलः सत्परीचारपावनः ॥ ॥ १२० ॥

शत्रुमित्रभिदाशून्यः शत्रुस्तुत्यमहागुणः ।
शत्रुदुर्मतिविध्वंसी शत्रुक्षेमविचिन्तनः ॥

आचार्यपदनिर्वोढा स्वाचार्यध्याननिर्मलः ।
आचार्यगुणसंपूर्णः प्राचार्योक्तिप्रकाशकः ॥

शान्तिप्रसूतिभवनं दान्तिप्रख्यातवैभवः । ॥ १३० ॥
तान्तिहारिनिजध्यानः कान्तिपुष्कलविग्रहः ॥

अष्टाक्षरार्थनिष्ठात्मा शिष्टाचारनिरूपकः ।
दुष्टाचारबहिष्कर्ता स्पष्टाचार्यपदाञ्चनः ॥

सर्वक्लेशविनिर्मोक्ता सर्वक्षेमविचिन्तनः ।
सर्वश्रीकरदिव्योक्तिस्सर्ववायकपादुकः ॥ ॥ १४० ॥

---

* இளையபெருமாளாக அவதரித்திருந்த காலத்திலென்க.

सेविताशेषसद्ग्रन्थः पाविताशेषसज्जनः ।
कोविदाभिष्टुतख्यातिर्भाविताच्युतसद्गुणः ॥
अच्युतध्याननिष्णातः प्रच्युताशेषपातकः ।
निश्चिताशेषतत्त्वार्थस्सच्चिदानन्दतुन्दिलः ॥
स्मयमानाननाम्भोजः दयमानदृगञ्चलः । ॥ १५० ॥
क्रियमाणजगत्क्षेमः ह्रियमाणभवार्तिकः ॥
बहुमानमहापात्रं बहुमानानपेक्षकः ।
बहुमानितपूर्वार्यः बहुमान्यमहिष्ठवाक् ॥
भयाकुलजनत्राता नयालयमहावचाः ।
हयाननसमज्ञानो दयाजलधिमानसः ॥ ॥ १६० ॥
क्षुद्रदुर्गुणदूरस्थो भद्रराशिविवर्धनः ।
विद्रुमाधरसंदृश्यसद्रमापतिकीर्तनः ॥
बद्धात्मबन्धनच्छेत्ता शुद्धात्मस्तोमसंस्तुतः ।
बुद्धादिमतमूलच्छित् सिद्धाखिलफलोदयः ॥
ब्रह्मदो ब्रह्मविद् ब्रह्मवादी (१७०) हब्रह्मविदाश्रितः ।
ब्रह्ममीमांसनोदश्चद्ब्रह्मज्ञानैकशेवधिः ॥
चार्वाकादिमतध्वंसी चार्वाकारजितस्मरः ।
दार्वाकारहृदां दूरः गीर्वाराशिप्रदायकः ॥
श्रीमाधवकृपावृद्धः प्रेमाविलमहाशयः ।
सीमातिगगुणाम्भोधिः कामादिदलनक्षमः ॥ ॥ १८० ॥

धीकारकमहासूक्तिः राकाशशिनिभाननः ।
आकारस्पष्टमाहात्म्यो $ हाकाराहंदयानिधिः ॥
अमोघानुग्रहोत्कर्षस्तमोहारितनुप्रभः ।
प्रमोदावहवाग्गुम्भो विमोहादिविमोचनः ॥
चिरस्थायिमहाख्यातिः परद्रोहपराङ्मुखः ॥ १९० ॥
करस्थाखिलशास्त्रार्थशिरस्स्थाचार्यपादुकः ॥
भोगभूमिनिराकांक्षः योगसिद्धिमदग्रिमः ।
यागभूमिमहाज्ञानः त्यागमण्डपकिङ्करः ॥
अल्पदुर्जनसंदोहजल्पदुर्धर्षवैभवः ।
कल्पपादपसंदोहकल्पश्रीसूक्तिसंचयः ॥
भक्तिसंतोषितश्रीशः मुक्तिसाधनसूक्तिदः । ॥ २०० ॥
मुक्तिभूमिविरक्तात्मा शक्तिभूमनिकेतनम् ॥
भोग्यसुन्दरदिव्याङ्गो योग्यशिष्यनिषेवितः ।
भाग्यशालिजनश्लाघ्यः श्लाघ्यसद्गुणसागरः ॥
इन्दिरापतिमाहात्म्यमन्दिरायितमानसः ।
सुन्दरोरुभुजः पादवन्दमानजनावनः ॥
चिन्तनातीतविभवः (२१०) सन्ततस्मरणीयवाक् ।
अन्तराराधितश्रीशचिन्तनैकरसायनः ॥
दुर्वचात्मीयदौर्भाग्यदुर्जनस्वान्तदूरगः ।
गर्वदुर्विधगम्भीरसज्जनस्वान्तमन्दिरः ॥

$ இப்படியுமொரு அருளுண்டோ ! என்று வியக்கத் தக்க தயை.

कर्कशोक्त्यनभिज्ञाता सत्कथाकथनप्रियः ।
भक्तपीयूषवाग्दाता त्यक्तसांसारिकक्रियः ॥
मुक्तभोगावलीदानप्रवीणो मुक्तकिल्बिषः । ॥ २२० ॥
शक्तसर्वेशदुस्साधकृत्यनिर्वहणक्षम: ॥
क्षमाधनः क्षमासिन्धुः क्षमामहिमदर्शकः ।
क्षमाभारजनात्युक्तिक्षमादर्शितवैभवः ॥
सीमातीतदयाशाली भूमाभर्तृगुणाशनः ।
व्योमाम्भोजायिताबद्धो हेमाब्जासनसुस्थितः ॥
कोपावेशविदूरस्थः (२३०) शापानुग्रहदक्षिणः ।
तापार्तावननिष्णातः पापारम्भपराङ्मुखः ॥
अकलङ्कमहाचन्द्रोऽनुपरागनिशाकरः ।
अदोषाकरशीतांशुरनूनकलचन्द्रमाः ॥
अप्रतिद्वंद्ववैदुष्यो निष्प्रतिद्वंद्ववैभवः ।
अनपायमहाभक्तिः (२४०)सदुपायप्रदर्शकः॥
उपायोपेयभूतांघ्रिरुपायान्तरदोषदृक् ।
स्वदृक्पथातिथिश्रीशः स्वमनोधृतसद्गुरुः ॥
स्वकण्ठस्थसदार्योक्तिः स्वसूक्त्याकृष्टरङ्गराट् ।
अप्राकृतवपुर्योग्यविप्राराधनतत्परः ॥
सुप्रापः (२५०) सुकृतिप्राप्यः दुष्प्रापार्थप्रदायकः ।
शिक्षिताशेषशास्त्रार्थो रक्षिताशेषसज्जनः ॥

काङ्क्षितार्थौघकल्पद्रुः वीक्षिताशेषवाङ्मयः ।
सूत्रभावार्थविज्ञाता सुविपश्चिदपश्चिमः ॥
सुसूक्ष्मार्थसमुद्घाटी सूरिवर्यः (२६०) सुबोधवाक् ।
सुप्रतीकस्सुप्रभातस्मर्तव्यः स्तव्यसद्गुणः ॥
गुणग्राही गुणैकान्तनिधिरुत्तमसंयमी ।
गुरुप्रवरसंभाव्यमहिमा महिमार्णवः ॥
गर्भश्रीमान् (२७०) महाधीरो धीरोदात्तो धरारविः ।
अभीष्टघटकोऽनर्थविध्वंसी ध्वस्तपातकः ॥
चातकोपमसच्छिष्यजीमूतो जीवनप्रदः ।
उज्जिजीविषुसच्छिष्यप्रपत्तव्यपदाम्बुजः ॥
अम्बुजन्मसजातीयहस्तमुद्राविराजितः । ॥ २८० ॥
विराजमानविमलविशालहृदयः कृती ॥
कृतार्थीकृतभूलोकः कृतार्थीकृतरङ्गराट् ।
कृतार्थीकृतशिष्यौघः कृतार्थीकृतमज्जनिः ॥
कृपारसघनः श्रेयान् श्रेयस्कृत् श्रेयसां निधिः ।
प्रतिभानिधिरुद्वेलकरुणावरुणालयः ॥ ॥ २९० ॥
हृत्पद्मकोशविलसच्छठकोपशुभाश्रयः ।
आश्रितत्रायकस्त्रातव्यन्तोऽनन्तवैभवः ॥
भवाब्धितरणिस्तीर्णसंसारसुमहार्णवः ।
दुग्धोदन्वत्सजातीयदिव्यमङ्गलविग्रहः ॥

दुराग्रहदविष्ठात्मा (३००) शुद्धात्मा शुद्धवाक्ततिः ।
शुद्धमानससच्छिष्यपरिचर्याप्रसन्नहृत् ॥
हृद्यानवद्यश्रीसूक्तिस्सूक्तिरत्नाकराननः ।
आननाम्बुजनिर्गच्छदाश्चर्योक्तिसुधारसः ॥
रसिकाग्रेसरो रम्यफणितिः फणिपुंगवः ।
शिष्यभावसमुत्कण्ठरङ्गनाथमनोहरः ॥ ॥ ३१० ॥
मनोहरमहासूक्तिविन्यासविशदप्रथः ।
प्रथमानयशस्स्तोमः स्तोकेतरगुणोज्ज्वलः ॥
जाज्वल्यमानदिव्याङ्गस्साङ्गवेदविशारदः ।
विशारदमहाशिष्यविशदीकृतवैभवः ॥
सहस्रगीतिव्याख्यानोपन्याससुविचक्षणः ।
द्रमिडोपनिषत्सारशतान्तादिकृतिप्रदः ॥
यतिराड्विंशतिग्रन्थनिर्माता यतिपुङ्गवः । ॥ ३२० ॥
ज्ञानसारार्थतत्वज्ञो मेयसारार्थबोधकः ॥
सप्तगाथार्थसारज्ञस्तत्वदर्शी बुधाग्रणीः ।
प्रामाणिकार्थप्रवणः प्रसिद्धामितवैभवः ॥
उपदेशमहारत्नमालाग्रन्थप्रदायकः ।
साधारणाब्दसंभूतस्तुलामूलर्क्षसंभवः ॥ ॥ ३३० ॥
ताम्रपर्णीतटोदञ्चत्कुरुकानगरोदितः ।
रामानुजाख्यपीठाढ्यदिव्यपुण्ड्रोल्लसन्मुखः ॥

सुरक्तवर्णश्रीचूर्णभासुरो भास्करोपमः ।
उचितस्थानसल्लक्ष्मदिव्यपुण्ड्रोल्लसत्तनुः ॥
मन्त्ररत्नानुसंधाननिरतो निरयान्तकः ।
दिव्यसूक्त्यर्थनिध्यानसन्नद्धपुलकोद्गमः ॥
श्रीभाष्यार्थसमुद्धर्ता श्रीभाष्यार्थविदुत्तमः ॥ ३४० ॥

अप्रमेयदयोदन्वान् अतिवेलगुणोज्ज्वलः ।
तेजोराशिमयस्तेजःपुञ्जमञ्जुमुखाम्बुजः ॥
रङ्गनाथसमुद्गीतमन्त्रविख्यातवैभवः ।
चित्तभोग्यश्चित्तहरश्रीसूक्तिश्चित्तमोहनः ॥
सदाध्येय स्सदागेयगुणौघ (३५०) स्सात्विकप्रियः ॥
यतीन्द्रयामुनार्यादिदिव्यसूक्त्यर्थदेशिकः ।
वकुलाभरणोक्त्यर्थवर्षुकश्शुद्धसात्विकः ॥
दीर्घबाहुर्विशालाक्षो द्राक्षापाकोक्तिदक्षिणः ।
श्रीवाग्भूषणसच्छास्त्रमहार्थामृतवर्षुकः ॥
मूलमन्त्रार्थतत्वज्ञः मूलनक्षत्रपावनः ॥ ३६० ॥

पावितास्विलसच्छिष्यो धावितास्विलदुर्मतिः ।
भवाख्यभोगिदष्टात्मजीवातुवचनप्रदः ॥
तृणीकृतविरिञ्चादिमहैश्वर्यो महागुरुः ।
श्रीहस्तिगिरिनाथाङ्घ्रिपद्मप्रावण्यविश्रुतः ॥

रङ्गनाथमनोहारिदिव्यश्रीसूक्तिदायकः ।
श्रीमल्लोकगुरूत्तंसश्रीसूक्त्यमृतरक्षकः ॥
सर्वार्थसंपत्सन्दाता सर्वश्रीवैष्णवाश्रयः ॥ ३७० ॥

श्रीवैष्णवमतोद्धर्ता श्रीवैष्णवमहागुरुः ।
श्रीवैष्णवकुलाचार्यः श्रीवैष्णवमहानिधिः ॥

यतिश्रेष्ठो यतीन्द्रांशो यतीन्द्रमतरक्षकः ।
रक्षकान्तरहीनात्मरक्षणैकसमुत्सुकः ॥

श्रीनाथयामुनार्यादिहृदयाम्बुरुहार्यमा ।
अर्थपञ्चकवैशद्यकारिसूक्तिप्रदायकः ॥ ३८० ॥

श्रीशैलनाथाचार्याङ्घ्रिपरिचर्यापरायणः ।
श्रीतोताद्रिमहायोगिवरिवस्यापरिष्कृतः ॥

भट्टनाथमहायोगिनिष्ठाहेतुर्नियामकः ।
श्रीवेङ्कटयतीन्द्रार्यप्रतिष्ठापनविश्रुतः ॥

वाधूलवरदाचार्यपरिचर्याप्रफुल्लहृत् ।
देवराजगुरूत्तंसकृतसेवाप्रहृष्टधीः ॥

वात्स्यश्रीवादिभयकृत्समुज्जीवनतत्परः ।
अमृतोपमदिव्योक्तिप्रदाताऽमितवैभवः ॥ ३९० ॥

आश्चर्यचर्य आचार्यसार्वभौमो जितेन्द्रियः ।
आजानपावनः पापवैदेशिक उदारवाक् ॥

इन्दुजैत्राननो नन्दनन्दनांघ्रिनिषेवण: ।
इन्दिरानुग्रहैकान्तभाजनं भगवत्प्रिय: ॥ ४०० ॥
ईर्ष्यादिदुर्गुणध्वान्तहन्ता हतबहिर्मत: ।
ईषणात्रयनिर्मुक्तो मुक्तिसाधनसूक्तिद: ॥
उत्तमस्सत्तमस्सत्यशीलश्शीलवदग्रणी: ।
उदारदिव्यश्रीसूक्तिरुपकारी (४१०) वशी पटु: ॥
ऊर्जिताध्यवसायाढ्य ऊर्ध्वसद्गतिदायक: ।
ऋक्षाधीशोपमेयास्य ऋषितुल्यो महामुनि: ॥
कण्ठस्थाशेषदिव्योक्ति: कान्तकोमलविग्रह: ।
किल्बिषध्वंसनध्यान: (४२०) कुण्ठिताशेषदुर्मत: ॥
कुलीन: कृष्णपादार्यभक्तिभूषितमानस: ।
केशवध्याननिष्णात: कोविदाग्रेसरस्तुत: ॥
कोमलाननपद्मश्री: कोमलानर्घसूक्तिद: ।
गतिर्गमयिता गर्वदूरगो (४३०) ¶ गानलोलुप: ॥
गीतार्थविशदीकर्ता गुरुराजो गुणाधिक: ।
गूढार्थतत्त्वविज्ञाता ज्ञातसर्वार्थसंचय: ॥
ज्ञापिताशेषतत्वार्थ: तापिताशेषदुर्मत: ।
स्थापिताचार्यसन्मार्ग: प्रापिताशेषसत्फल: ॥ ४४० ॥
सर्वविद्यानिषद्यात्मा सर्वोत्तमगुणभूषित: ।
सत्संप्रदायसंरक्षी स्थिरधीर्मधुरोक्तिद: ॥

¶ ஆதிசேஷதுகையாலே.

मनीषिप्रवरो मान्यो माननीयमहागुण: ।
महात्मवृन्दसंसेव्यचरण: करुणाकर: ॥ ४५० ॥

करस्थमुक्तिसर्वस्व: कान्तजामातृयोगिराट् ।
सुमनास्सुमनस्सेव्यस्सूनृतोक्तिविभूषण: ॥

दम्भासूयाविनिर्मुक्तो मुक्ततुल्यो महामना: ।
महनीयमहाचार्यो महातेजा (४६०) महायशा: ॥

परमात्मगुणध्यानपवित्रीकृतमानस: ।
परस्वविमुख: पूर्णप्रज्ञ: प्रज्ञामृतोदधि: ॥

पावन: परमाचार्य: प्रधानगुरुपीठभाक् ।
भयानकभवध्वान्तसंहर्ता भक्तिसागर: ॥ ४७० ॥

भव्यवाग्विततिर्भावगर्भसूक्तिसहस्रद: ।
भयापहर्ता भावज्ञ: भावोद्घाटनपण्डित: ॥

यशस्वी यतिराजांशो यतिराण्मतवर्धन: ।
यतीन्द्रप्रवण: प्राज्ञस्तुतकीर्ति: (४८०) पवित्रवाक् ॥

परिशुद्धसदाचार: प्रेमसिन्धु: प्रियङ्कर: ।
मुक्तिमूलमहासूक्ति: स्वादुसूक्तिसुखावह: ॥

प्रहर्षैकनिधि: प्रेमपरिपूर्ण: प्रहर्षद: ॥ ४९० ॥

प्रकृष्टधी: प्रशस्तार्थप्रकाशनकृतोदय: ।
सुधाझरीसरीत्युक्तिस्सुप्रसन्नमुखाम्बुज: ॥

असत्यवाक्कथागन्धवैदेशिकवचस्तति: ।
अन्याय्यार्थकथाशून्यो न्याय्यार्थपरिपालक: ॥

नारायणगुणाम्भोधिनिष्णातो नित्यसूरिराट् ।
निर्मलोदारवाग्गुम्भो (५००) नित्यसत्वो निरञ्जन: ॥

पूर्वोत्तराघनिश्शेषनिबर्हणविचक्षण: ।
ध्रुवकीर्तिलसन्मूर्ति: भवभेषजभाषित: ॥

स्वामी स्वभक्तसंतानयोगक्षेमधुरन्धर: ।
यतिकण्ठीरवो योगिसिंहस्संन्यासिशेखर: ॥ ५१० ॥

अर्थिताधिकसंदाता वर्धितात्मगुणावलि: ।
स्तम्भितारातिदुश्चेष्ट: जृम्भितोत्तुङ्गवैभव: ॥

दृष्टार्थनिरपेक्षात्मा स्पष्टार्थकवच:प्रद: ।
शिष्टाग्रगण्यसेव्यांघ्रि: हृष्टान्तेवासिसेवित: ॥

मृष्टान्नसमवाग्दाता सृष्टाद्भुतनिबन्धन: ॥ ५२० ॥

क्लिष्टार्थकथनत्यक्ता नष्टान्तरतमश्छट: ।
अल्पीकृतपरग्रन्थ: स्वल्पीकृतकुदृग्यशा: ॥

सर्वदेवालयोल्लासिस्वीयाप्रतिमवैभव: ।
स्वदिव्यशासनोदञ्चद्दिव्यदेशसमृद्धिक: ॥

सारासारविवेकान्धसमुज्जीवनतत्पर: ।
सुदुर्गमार्थसंदाता सुदुर्लभपुमर्थद: ॥

परभक्तिसरित्सिन्धुः (९३०) परज्ञानमहार्णवः ॥
अनन्यभक्तिसंपन्नो जाग्रत्परमभक्तिकः ।
प्रकृतिप्राकृतोन्मुक्तः प्रकृत्या सात्त्विकाग्रणीः ॥
नामकीर्तनमात्रेण नरकाध्वनिवर्तनः ।
धामकीर्तनमात्रेण दिव्यधामाधिरोपणः ॥
धर्मशास्त्रार्थमर्मज्ञो धर्माधिष्ठानदैवतम् ।
कूलङ्कषमनीषाढ्यः (९४०) कुलपांसनपावनः ॥
अनल्पशक्तिकोऽनल्पविज्ञानोऽनल्पवैभवः ।
पारमार्थिकविज्ञानः परावरविदुत्तमः ॥
धर्मज्ञसमयाभिज्ञोऽभिज्ञविज्ञेयवैभवः ।
सत्कारयोग्यस्सत्कार्यशतसाहस्रकारकः ॥ ५९० ॥
कलिविक्रमनिर्हन्ता कलिकल्मषकर्शनः ।
कलितानेकसद्ग्रन्थः कलिध्वान्तदिवाकरः ॥
कलिकोलाहलक्रीडासमूलोन्मूलनक्षमः ।
कलिवैरिमहासूरिसूक्तिसाहस्रतत्त्ववित् ॥
कलिवैरिमहाचार्यव्याख्यानैकरसायनः ।
सर्वपातकसंहर्तृस्वपादसलिलप्रदः ।
दहराकाशविन्यस्तहृषीकेशो हृषीकजित् ॥ ५६० ॥
नीतिमार्गैकनिष्णातो नेत्रानन्ददविग्रहः ।
दमोदधिश्शमोदन्वान् दमितेन्द्रियदुर्नयः ॥

दीनबन्धुर्दयासिन्धुरात्मबन्धुरशेषवित् ।
सुशिक्षितः (९७०) सुधासूक्तिर्दक्षिणाशाविभूषणः ॥
धन्यो धन्यजनैर्धन्यचरितो धन्यभाषितः ।
दृढाध्यवसितिर्धीमान् धीमदग्रेसराग्रिमः ॥
दिव्यधेनुसमो (९८०) दिव्यदेशकैङ्कर्यवर्धनः ॥
दिव्यसूर्यकतारात्मा दिव्यामलवचोमृतः ।
न्यक्कृतामृतवाग्गुम्भो धिक्कृताशेषदुर्मतः ॥
सत्कारपात्रं सन्मार्गसंरक्षणपरायणः ।
शुद्धपद्धतिसंदर्शी बद्धचेतनमोचनः ॥
मोचाफलमदध्वंसिसूक्तिः (९९०) मुदितमानसः ॥
मनोवाक्कायसंशुद्धो महात्मा मोहनाशनः ।
मोहनो मोदनो मोक्षदायी मुख्यगुरूत्तमः ॥
रङ्गराजहृदुल्लासनिदानं रागदूरगः ॥ ६०० ॥
रामाधिकगुणोच्छ्रायो रागद्वेषमलापहः ।
रञ्जिताखिलसच्चित्तो रम्यजामातृसंयमी ॥
मुमुक्षूपास्यपादाब्जो मुक्तिमूलनिजोदयः ।
विवेकिविबुधश्लाघ्यो विवेचनविचक्षणः ॥
आत्मस्तुतिकथाशून्यः परनिन्दापराङ्मुखः ॥ ६१० ॥
अजातशत्रुरानन्दसंदायी सद्गुणोज्ज्वलः ।
जातिधर्मपरिष्कर्ता कुलधर्मप्रपञ्चनः ॥

आश्रमोचितसद्धर्मविशदीकृतिदक्षिण: ।
सर्वातिशायिसामर्थ्य: सर्वोत्तुङ्गगुरूत्तम: ॥
सर्वेश्वरसदाचार्य: सर्वेश्वरजयध्वज: ॥ ६२० ॥
आप्ताग्रणीरभीष्टार्थपूरक: क्रोधदूरग: ।
धृतसौमित्रिवेषोऽपहृतराक्षसदुर्मद: ॥
कृतशूर्पणखाभङ्गो नतरामपदाम्भुज: ।
वृतशाश्वतकैङ्कर्यो हतरावणपुत्रक: ॥
धृततूणीरकोदण्डो (६३०) जितनिद्रानिषेवण: ॥
पण्डिताग्रेसरप्राप्य: खण्डिताशेषदुर्मत: ।
दण्डिताशेषदुष्टौघो मण्डिताशेषमन्दिर: ॥
कुण्डलीन्द्रावतारार्य: खण्डनीयार्थखण्डन: ।
दण्डनीयजनत्राता मण्डनीयवचस्तति: ॥
अर्णवाधिकगाम्भीर्यो (६४०) वर्णनातिगवैभव: ॥
निर्णयाञ्चितदिव्योक्ति: कर्णपीयूषकीर्तिमान् ।
दुर्नयातीतफणितिस्सन्नयोदञ्चदुक्तिक: ॥
छिन्नसंसारकान्तार: खिन्नमानसहर्षण: ।
भीतभीतिनिराकर्ता वीतरागनिषेवित: ॥
नीतसन्मार्गसच्छिष्यो (६५०) धूतपाषण्डमण्डल: ॥
पीतसूक्तिसुधासारो गीतकीर्तिरकीर्तिहा ।
यातनाहरणव्यग्रो नूतनाम्भोरुहानन: ॥

सिद्धान्तार्थविनिश्चेता शुद्धान्तःकरणाग्रणीः ।
सिद्धाशेषफलप्राप्तिर्बद्धात्मार्तिनिषूदनः ॥ ६६० ॥
दग्धाशेषदुराक्षेपो दुग्धाकारवचस्ततिः ।
स्निग्धानन्दिमुखाम्भोजो मुग्धाकारजितस्मरः ॥
अध्वानध्वविनिश्चेता मध्वासारसदृग्वचाः ।
दुर्ध्वान्तक्षतिकृत्सूक्तिः हृद्ध्वान्तक्षेपदक्षिणः ॥
मुखाम्बुजविनिर्गच्छत्सुखावहवचोमृतः ।
शिखाञ्चितशिराः (६७०) शेषमुखार्हनिजवर्णनः ॥
आर्तरक्षणनिष्णातो मूर्तसद्भाग्यसंचयः ।
कीर्तनीयमहाकीर्तिः धूर्तशिक्षणदक्षिणः ॥
प्रीतमानससच्छिष्यगीतदिव्यगुणोच्चयः ।
द्योतमानवपुःकान्तिधूतहार्दतमश्छटः ॥
परिपोषितसन्मार्गः परितोषितसात्विकः ।
परिशोषितदुःखाब्धिः (६८०) परिघोषितसद्यशाः ॥
श्रीमत्सुन्दरजामातृनामख्यातमहामुनिः ।
धीमच्छिष्यजनस्तोमक्षेमस्थेमविवर्धनः ॥
महाभागवतश्रेष्ठो महाभक्तशिखामणिः ।
महाविद्वद्वरिष्ठाग्र्यो महाचार्यपदाञ्चितः ॥
अतिमानुषचर्याकृदतिमानुषशीलवान् ।
अतिमानुषविद्यावान् (६९०) अतिमानुषवैभवः ॥

मन्देतरगुणग्रामस्संदेहगणखण्डनः ।
चिन्तासंतानविच्छेदी संतापहरसूक्तिदः ॥
अतिभोग्यवचोराशिरतिभोग्यसुविग्रहः ।
अतिभोग्यगुणोदन्वानतिभोग्यचरित्रवान् ॥
प्रीतिप्रेरितवाग्दाता (७००) भीतिच्छेदनकोविदः ॥
नीतिस्थापननिष्णातः ख्यातिस्थेमनिवासभूः ॥
हृद्यानन्तगुणस्तोमो विद्यावर्धनबद्धधीः ।
श्रीशैलेशदयापात्रमन्त्रविख्यातवैभवः ॥
श्रीरामानुजयोगीन्द्रनामालङ्कृतविग्रहः ।
श्रीमल्लोकार्यसोदर्यचातुर्यसफलत्वकृत् ॥
श्रीशठारिमुनीन्द्रोक्तिचन्द्रिकाविमलाशयः ।
परकालमुनीन्द्रोक्तिपवित्रीकृतमानसः ॥ ७१०. ॥
सरोयोगीन्द्रसूक्तत्र्यात्मशिरोभूषणभूषितः ।
भूतयोगीन्द्रभव्योक्तिपूतमानसपङ्कजः ॥
महदाह्वययोगीन्द्रमहिष्ठोक्तिविभावनः ।
भक्तिसारमुनीन्द्रोक्तिभक्तिभूषितमानसः ॥
कुलशेखरसूर्यङ्घ्रिजलजाञ्चितमानसः ।
भट्टनाथमुनीन्द्रोक्तिहृष्टपुष्टमहामनाः ॥
गोदादिव्यप्रबन्धार्थबोधामोदसुगन्धिहृत् ।
शठारिभक्तमधुरकविनिष्ठागरिष्ठधीः ॥

भक्ताङ्घ्रिरेणुभव्योक्तिमुक्ताफलविभूषणः ।
मुनिवाहनयोगीन्द्रमूर्तिध्यानप्रहृष्टधीः ॥ ७२० ॥
श्रीमन्नाथमुनीन्द्रार्यश्रीपादाम्भोजषट्पदः ।
पुण्डरीकाक्षसच्चित्तपुण्डरीकदिवाकरः ॥
श्रीराममिश्रपादाब्जश्रीपरिष्कृतमानसः ।
श्रीमद्यामुनसूरीन्द्रश्रीपादाब्जमधुव्रतः ॥
महापूर्णगुरुश्रेष्ठमहागुणविभावनः ।
श्रीमच्छ्रीशैलपूर्णार्यश्रीमुखाम्भोजभास्करः ॥
गोष्ठीपूर्णगुणध्यातृगोष्ठीनिष्ठागरिष्ठधीः ।
मालाधरमहिष्ठोक्तिमालाभूषितमानसः ॥
श्रीमत्काञ्चीमुनीन्द्रोक्तश्रीसूक्त्यमृतसेवनः ।
रङ्गामृतकविप्रोक्ततुङ्गानर्घवचोर्थवित् ॥ ७३० ॥
रामानुजपदच्छायानामार्यगुणचिन्तनः ।
कुरुकाधीश्वराभिख्यगुरुसूक्तिविशारदः ॥
श्रीवत्सचिह्नमिश्रार्यश्रीसूक्त्यर्थप्रपञ्चनः ।
श्रीपराशरभट्टार्यश्रीपादाब्जैकधारकः ॥
अष्टश्लोकीसदाध्याननिष्ठश्रीवैष्णवप्रियः ।
वेदान्तवेद्यगुरुराट्पादान्तिकनिविष्टहृत् ॥
नवसाहस्रदिव्यार्थभवनायितमानसः ।
कलिवैरिमहाचार्यकलितग्रन्थचिन्तनः ॥

कृष्णपादमहासूक्तिपुष्टमानसमण्डलः ।
श्रीमत्कृष्णसमाह्वार्यश्रीसूक्तयर्थोपदेशकः ॥ ७४० ॥

लोकाचार्यपदाब्जावलोकनोत्कण्ठिमानसः ।
तत्वशेखरदिव्यार्थतत्वनिध्याननिर्मलः ॥

रहस्यत्रयतत्वार्थसदस्यत्वकृतिक्षमः ।
तत्वत्रयनिबन्धार्थतत्वख्यापनकोविदः ॥

प्रमेयशेखरग्रन्थाप्रमेयार्थप्रसादनः ।
सत्प्रपन्नपरित्राणहृत्परित्राणपण्डितः ॥

श्रीमद्वचनभूषार्थश्रीमद्गाम्भीर्यबोधनः ।
श्रीशैलनाथपादाब्जपरिचर्यापरिष्कृतः ॥

सुपरिष्कृतदिव्योक्तिसपरिष्कारमानसः ।
वेदमार्गप्रतिष्ठाता (७५०) वैदिकोत्तमसेवितः ॥

विदिताखिलवेद्यार्थो वेदार्थविमलाशयः ।
आशालेशविनिर्मुक्तो मुक्त्यैश्वर्यमहाधनः ॥

ममभाता ममपिता ममभ्राता ममात्मजः ।
ममप्रिया (७६०) ममसुहृन्ममबन्धुर्ममालयः ॥

ममवित्तं ममनिधिर्ममैश्वर्यं ममाखिलम् ।
दिव्यसौन्दर्यनिलयो दिव्यलावण्यमन्दिरम् ॥

दिव्यव्याख्यानरचनो (७७०) दिव्योपन्यासवैभवः ॥

कर्मबन्धनविच्छेत्ता धर्मपद्धतिशोधनः ।
मर्मविज्ञानकुशलः शर्मसंदायिसूक्तिकः ॥

गर्भजन्मजरामृत्युदुःखसागरशोषणः ।
गर्भस्थाशेषशास्त्रार्थवैदुष्यख्यापनोक्तिदः ॥

विलक्षणमहाचार्यो विलक्षणमहामतिः ।
विलक्षणसदाचारो (७८०) विलक्षणमहायशाः ॥

अज्ञातनिग्रहो नित्यानुग्रहस्सुग्रहोक्तिदः ।
सर्वपातकविध्वंसिसर्वशोभनलोचनः ॥

नित्यग्रन्थविनिर्माता नित्यसद्ग्रन्थसेवनः ।
नित्याराध्यवपुर्नित्यनिध्यातगुरुपादुकः ॥

प्रथमानमहाकीर्तिः (७९०) प्रकृष्टगुणशेवधिः ।
अपरोक्षितसर्वार्थः परोक्षार्थप्रकाशकः ॥

शोभनाकारसंस्थानसूचितज्ञानवैभवः ।
कुलदीपः कुलधनं कुलदः कुलनायकः ॥

कुलाचार्यः कुलपतिः (८००) कुलीनः कुलदैवतम् ।
देहात्मभ्रमविच्छेत्ता स्वतन्त्रात्मभ्रमापहः ॥

अन्यशेषत्वधीहर्ता स्वात्मत्राणोन्मुखत्वहा ।
बान्धवाभासलोलत्वपरिहर्ता प्रशस्तवाक् ॥

शेषलक्ष्मपरिष्कर्ता पारतन्त्र्यप्रपञ्चनः ॥ ॥ ८१० ॥

जीवात्मभोग्यतावेषविशदीकारिसूक्तिदः ।
काञ्चीनगरसौभाग्यसर्वस्वोज्जृम्भणेक्षणः ॥

गीतार्थसंग्रहज्ञाता चतुःश्लोकीविशारदः ।
स्तोत्ररत्नार्थविज्ञानपात्रभूतमहामनाः ॥

सिद्धित्रयार्थविज्ञानसिन्धुर्बुद्धिमदग्रणीः ।
अप्रमेयागमप्रामाण्यादिग्रन्थप्रबोधनः ॥

वेदार्थसंग्रहोदञ्चद्वेदार्थविमलाशयः ।
गीताभाष्यार्थसर्वस्वदाता (८२०) वेदान्तसारवित् ॥

वेदान्तदीपविज्ञाता वेदान्तार्थौघतत्ववित् ।
श्रीभाष्यार्थविशेषज्ञः श्रीभाष्यार्थोपदेशकः ॥

शरणागतिगद्यार्थधरणोल्लासिमानसः ।
श्रीरङ्गगद्यविज्ञातश्रीरङ्गाधीशवैभवः ॥

वैकुण्ठगद्यहृद्यार्थाकुण्ठज्ञानविभासुरः ।
वैकुण्ठस्तवतत्वार्थाकुण्ठबोधनकोविदः ॥

अतिमानुषनुत्यर्थस्थितिभासुरमानसः ॥ ॥ ८३० ॥

सुन्दरोरुभुजस्तोत्रसुन्दरार्थप्रबोधनः ।
हस्तिनाथस्तवोदञ्चत्स्वस्तिविस्तारणप्रभुः ॥

श्रीस्तवप्रेमसंपन्नः श्रीकटाक्षैकभाजनम् ।
सहस्रनामभाष्यार्थसारस्योद्बोधनक्षमः ॥

रङ्गराजस्तवोदञ्चन्मङ्गलार्थोपदेशनः ।
लक्ष्मीगुणमहारत्नकोशस्तोत्रार्थकोविदः ॥

श्रुतप्रकाशिकार्थौघप्रकाशनविशारदः ।
सर्वाचार्योक्तिनिध्याननिर्वासितरजस्तमाः ॥

सर्वाचार्यसमूहात्मा (८४०) सदाचारप्रवर्तकः ।
सिद्धान्तस्थापनाचार्यस्सदाचार्योक्तिवर्धनः ॥

प्रतिभानिधिरज्ञातविप्रलम्भोपलम्भनः ।
उपालम्भविदूरस्थः कृपालम्भनकोविदः ॥

अपारशास्त्राकूपारपारणापरिहृष्टहृत् ।
आर्तिप्रबन्धनिर्माणविधूतार्तिर्नतार्तिहा ॥ ॥ ८५० ॥

सर्वसंपत्प्रदस्सर्वशोकहारी शुभाननः ।
इतिहासपुराणार्थतत्त्वबोधविभूषणः ॥

शुद्धानुष्ठानसंपन्नश्शिष्योज्जीवनतत्परः ।
सद्बुद्धिशेवधिस्साधुसेवितः सेव्यसेवकः ॥

आचार्यसेवाहेवाकसमुत्पादनदक्षिणः ॥ ॥ ८६० ॥

दिव्यसूरिपदाम्भोजदिव्यामृतनिषेवणः ।
पुराणरत्नतत्वार्थनिराकृतबहिर्मतः ॥

श्रीरङ्गनगरीलक्ष्मीविवर्धनविचक्षणः ।
श्रीरङ्गनाथभगवन्मनोरथसुपूरकः ॥

रामानुजार्यदिव्याज्ञानिर्वर्तनधुरन्धरः ।
मूलमन्त्रमहार्थौघमूलसूक्तिमहार्णवः ॥

मन्त्ररत्नगभीरार्थयन्त्रिताशेषमानसः ।
चरमश्लोकनिष्कृष्टपरमार्थप्रकाशकः ॥

स्वभक्तमानसोद्यानविभक्तात्मीयवासभूः ।
घोरसंसारवाराशिपारभूमिप्रदर्शकः ॥ ॥ ८७० ॥

अशेषदिव्यदेशीयविशेषविभवास्पदम् ।
सर्वेश्वरस्वरूपादिसर्वोद्बोधनकोविदः ॥

अद्वैतश्रुतितात्पर्यविद्योतनविशारदः ।
द्वैतश्रुत्याशयोद्घाटी द्वैताद्वैतसमन्वयी ॥

घटकश्रुत्यभिप्रायघटिताम्नायसंचयः ।
मायातीतो महाशान्तो महादान्तो विमत्सरः ॥ ॥ ८८० ॥

मायिमातङ्गपञ्चास्यो मायामूलनिकृन्तनः ।
विप्रलिप्साविदूरस्थो निष्प्रतिक्रियपापहृत् ॥

भ्रमप्रमाददूरस्थः क्रमप्राप्तार्थबोधकः ।
प्रमाणपदवीधुर्यस्समानरहितोक्तिकः ॥

अर्चिरादिगतिध्याता वर्चसां निधिरुत्तमः ॥ ॥ ८९० ॥

अष्टादशरहस्यार्थनिष्ठाधिष्ठितमानसः ।
आर्द्रचेता गभीरात्मा गभीरार्थप्रपञ्चनः ॥

सर्वप्रपञ्चसौभाग्यफलरूपनिजोदयः ।
उद्यद्भानुसहस्राभो विद्युद्भावितविग्रहः ॥

मङ्गलावहदिव्योक्तिर्मङ्गलावहचिन्तनः ।
मङ्गलावहनामोक्तिः (९००) मङ्गलावहवैभवः ॥

चिन्तिताशेषफलदश्चिन्तातीतफलप्रदः ।
परमार्थपरित्राता परमार्थनिरूपकः ॥

साक्षात्कृतमहातत्त्वस्तत्वज्ञस्तत्वशोधनः ।
शोधनानर्हदिव्योक्तिश्शोधनीयार्थशोधकः ॥ (९१०)

द्राविडाम्नायसौभाग्यं द्राविडागमदेशिकः ।
द्राविडश्रुतिसद्दीपशलभक्षपणक्षमः ॥

महोदारो महाधीरो महत्तरपदोचितः ।
महाव्रती महाशक्तिर्महर्ष्यधिकवैभवः ॥

महर्षिमान्यो (९२०) मन्त्रज्ञस्सर्वमन्त्रार्थसारवित ॥

विद्वन्मोदप्रदस्वोक्तिः विद्वच्चित्तविहारभूः ।
विनयोत्पादनव्यग्रो विनयैकनिरूपितः ॥

अनायाससमुद्धूतदुरर्थो देशिकाग्रणीः ।
सदर्थसागरस्साधुपद्धतिक्षेमकारणम् ॥ ॥ ९३० ॥

शेषावतारश्शेषाद्रिशेखरप्रभुसेवकः ।
प्रभुसेवाकथाशून्यः प्रसिद्धगुरुतल्पजः ॥

शुक्लपक्षेन्दुवन्नित्यसमिन्धानयशश्चयः ।
अशरण्यशरण्यात्मा शरणागतवत्सलः ॥
सौलभ्यसिन्धुरक्षोभ्यसूक्तिस्सौशील्यविश्रुतः ॥ ॥ १४० ॥

बहुश्रुतः श्रुतिश्रेणीभूषणीभूतवाक्ततिः ।
भक्तिज्ञानविभूषाढ्यो भस्मच्छन्नानलोपमः ॥

मुमुक्षुवेद्यसर्वार्थसार्थदानविचक्षणः ।
अर्थपञ्चकवैशद्यवर्धनोक्तिप्रदायकः ॥

इतिहासप्रकृष्टत्वप्रदर्शी प्रणवार्थदः ।
लक्ष्मीपुरुषकारत्वनिरूपणविचक्षणः ॥

लक्ष्मीकृपापारतन्त्र्यानन्यार्हत्वनिरूपकः ॥ ॥ १५० ।

सीताविश्लेहेतूक्तिप्रहर्षितविवेकिहृत् ।
रमोपदेशसारस्यसंप्रदर्शनकोविदः ॥

महाभारतसारार्थपरिष्करणपण्डितः ।
भगवत्प्रेमसंपत्तिप्रपञ्चनपरायणः ॥

प्रपत्तिवेषसर्वस्वप्रकाशनपटूक्तिदः ।
भरन्यासानुपायत्वनिर्धारणधुरन्धरः ॥

परत्वप्रक्रियातत्वप्रदर्शनपरोक्तिदः ।
व्यूहावतारतत्वार्थदर्शी दर्शनरक्षकः ॥

रामकृष्णादिविभवावतारपरिशीलनः ॥ ॥ १६० ॥

अन्तर्यामिस्वरूपादिविशोधनविशारदः ।
अर्चावतारसाद्गुण्यचर्चाशालिवचःप्रदः ॥
न्यासाधिकारित्रैविध्यनिरूपणनिविष्टधीः ।
स्वप्रयत्ननिवृत्त्यादिसदर्थस्थापनोत्सुकः ॥
दास्यैकवेषतारूपस्वस्वरूपविशोधनः ।
पारमैकान्त्यसल्लक्ष्मप्रतिष्ठापनविश्रुतः ॥
उपायोपेयनिष्ठात्मलक्षणप्रतिबोधकः ।
सकलात्मगुणश्रेष्ठशान्तिदान्तिप्रदर्शकः ॥
प्रपन्नावश्यकांशौघप्रकाशनलसद्वचाः ।
स्वरूपप्राप्तशेषत्वप्राधान्याविष्कृतिक्षमः ॥ ॥ १७० ॥
उपायान्तरहेयत्वप्रदर्शनपटूक्तिदः ।
शरणागतिसारस्यसंप्रदर्शनतत्परः ॥
सिद्धोपायावगाढात्मप्रभावख्यापनोक्तिदः ।
परमात्मकृतस्वीकृत्यनर्घत्वप्रदर्शकः ॥
नायमात्मेतिवेदान्तवाक्यार्थविवृतिक्षमः ।
मङ्गलाशासनौचित्यप्रख्यापनपरायणः ॥
भक्तदेहोत्थभगवद्व्यामोहविनिवेदकः ।
परदुःखविषण्णत्वरूपार्थस्थापनक्षमः ॥
निर्हेतुककृपातत्वनिरूपणविचक्षणः ।
दोषभोग्यत्वरूपार्थप्रतिष्ठापनपण्डितः ॥ ॥ १८० ॥

कैवल्यनित्यमुक्तितत्त्वसंस्थापनसमर्थधीः ।
सकृत्प्रणामानुष्ठानसौवादवसमर्थनः ॥

नव्यनव्यदुराचारवैमुख्योत्पादनोक्तिदः ।
द्राविडाम्नायविद्वेषिदुरध्वविनिवारकः ॥

अशुद्धमतनिष्ठोक्तदुरर्थक्षेपदक्षिणः ।
विशुद्धसंप्रदायस्थसुशुद्धहृदयालयः ॥

विवक्षितार्थविशदीकारदक्षवचःप्रदः ।
प्रदत्तसर्वसौभाग्यो भाग्यभूमप्रदर्शितः ॥

प्रदर्शितविशेषार्थः (९९०) प्रदर्शितमहागुणः ॥
प्रदर्शितमहावर्त्मा प्रदर्शितमहानिधिः ।
प्रदर्शितमहाभूमा प्रदर्शितसुविग्रहः ॥

प्रदर्शितस्वपादाब्जः प्रदर्शितमहाकृपः ।
कृपाविभवसन्दत्तसुपावनवचस्ततिः ॥

वचस्ततिसहस्रार्हविश्रुतामितवैभवः ।
परस्सहस्रनामौघप्रकाश्यमहिमार्णवः ॥ ॥ १००० ॥

अहोरात्रमदुद्गीतमहोत्तुङ्गवचःप्रदः ।
अनारतमदुद्गीतस्वनामावळिहृष्टहृत् ॥

पवित्रीकृतमज्जन्मा पवित्रीकृतमद्वचाः ।
पवित्रीकृतमद्वंशः पवित्रीकृतमन्मनाः ॥

श्रीवादिभीकराचार्यश्रीमत्कुलमहाधनम् ।
अण्णङ्गराख्यविख्यातदासमानसवासभाक् ॥ ॥ १००८ ॥

इति श्रीकाञ्चीप्रतिवादिभयङ्कर—अण्णङ्गराचार्यनामक
श्रीवैष्णवदासविज्ञापितं
श्रीमद्वरवरमुनि सहस्रनामस्तोत्रं समाप्तम् ॥



श्रीरस्तु ॥

# श्रीमद्वरवरमुन्यष्टोत्तरशतनामस्तोत्रम् ॥



सहस्रनामकीर्तनेष्वतृप्तिपूर्णमानसं पुनःपुनस्त्वदिव्यनामकीर्तनैकदीक्षितम् ।
जनं त्विमं वरो मुनिः कृपानिधिः प्रसन्नधीः पुनश्च चोदयत्यहो शताभिधानकीर्तने ॥

— —

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवः ।
यतीन्द्रप्रवणो वन्द्यो रम्यजामातृयोगिराट् ॥
यतीन्द्रापरपर्यायः पर्यायभुजगेश्वरः ।
वाचस्पतिर्विशदवाक्चूडामणिरमेयधीः ॥ ॥ १० ॥
श्रीमत्परमहंसार्यस्तत्वज्ञानविवर्धनः ।
यथाभूतार्थकथनो यथादृष्टार्थबोधनः ॥

यथार्थसूक्तिनिवहो यथार्थानुग्रहोदयः ।
त्रिदण्डमण्डनस्सौम्यशिखावान् शोभनाकृतिः ॥

सर्वसौहार्दनिलयः (२०) सुमुखस्सौख्यदायकः ॥

जयप्रदमहासूक्तिर्जयशीलो जगद्गुरुः ।
तेजोनिधानवदनस्तेजिष्ठस्तीर्थपावनः ॥

क्षेत्रयात्रापवित्रात्मा क्षेत्रक्षेमविवर्धनः ॥ ॥ ३० ॥

सिद्धसाधननिष्ठात्मा सिद्धसर्वार्थसंचयः ।
सिद्धिदश्शुद्धहृदयो विशुद्धवपुरुज्ज्वलः ॥

अमन्दानन्दसंदोहसंदायकवचोमृतः ।
अमृतप्रायवाग्गुम्भविवशीकृतरङ्गराट् ॥

जगद्गुरुगुणस्तोमविशदीकरणप्रभुः ।
गुणैकदर्शी (४०) गूढार्थव्याख्याता वाक्यतत्त्ववित् ॥

विद्वद्वरेण्यसंस्तुत्यविमलोदारभाषणः ।
जात्याश्रयनिमित्तादिदुष्टान्नपरिहारकः ॥

सर्वश्रमापहार्युक्तिः समदर्शी सतांनिधिः ।
रजस्तमोविदूरात्मा शुद्धसात्त्विकविग्रहः ॥

पद्मपादः (५०) पद्मपाणिः पद्मवक्त्रः पवित्रधीः ॥

दुर्गुणध्वान्तसंहर्ता सद्गुणस्तोमशेवधिः ।
श्रीपादतीर्थसंदानसमुज्जीवितचेतनः ॥

चैतन्यस्तन्यसंदानसंवर्धितमहीतलः ।
कृत्स्नभूमण्डलव्यापिदिव्यकीर्तिसमुज्वलः ॥

स्वपादरेखारूपश्रीतोताद्रिमुनिसंस्तुतः ।
अविज्ञातवृथाजल्पः (६०) सुविज्ञातार्थपञ्चकः ॥

अविज्ञातनरस्तोत्रस्सुविज्ञातगुरुस्तुतिः ।
गरिष्ठगोष्ठ्यधिष्ठाता गरीयान् गाढभक्तिदः ॥

रङ्गनाथमुखोदञ्चन्मङ्गलश्लोकसंस्तुतः ।
वादिभीतिकराचार्यसदाचार्यस्सदाश्रयः ॥

त्रैगुण्यसंगरहितः (७०) लय्यन्तपरिपोषकः ॥

भगवद्गुणविद्धात्मा भक्तिभूषोऽभिरामवाक् ।
स्वरूपानुगुणोपायनिष्कर्षी निस्समानधीः ॥

निस्समाभ्यधिको नेता निष्कृष्टज्ञानसागरः ।
उत्कृष्टजन्मनिष्कर्षी (८०) निकर्षध्याननिष्ठधीः ॥

शीतलोदारहृदयो हार्दभक्तचमृतार्णवः ।
अर्णवादपि गम्भीरो डम्भासूयादविष्ठहृत् ॥

शास्त्रतात्पर्यनिर्णेता शास्त्रविश्वासवर्धनः ।
सर्वसंगपरित्यागी पारमैकान्त्यभूषणः ॥

सुदृढाध्यवसायाढ्यः (९०) सुप्रतिष्ठितदर्शनः ॥

गुणानुभवकैङ्कर्यनैयत्यनिरताग्रणीः ।
आचार्यप्रेमसंपत्तिसमुज्ज्वलितमानसः ॥

आभ्यन्तरदृढप्रेमा बाह्याडम्बरवर्जितः ।
सर्वप्रमाणसंग्राही सर्वभूतसुहृत्तमः ॥

सर्वपापफलध्वंसी सर्वपुण्यफलप्रदः ।
सर्वदेशदशाकालसमिन्धानयशश्चयः ॥ ॥ १०० ॥

सर्वदेवालयस्तोमसमुद्घोषितवैभवः ।
सत्संप्रदायसिद्धान्तसंवर्धनविचक्षणः ॥

सर्वदेवालयाराध्यदिव्यमङ्गलविग्रहः ।
सर्वशास्त्रार्थवैशद्यसमुत्पादकसूक्तिदः ॥

सर्वसूरिगणांशात्मा सर्वविज्ञानसागरः ।
सर्वाचार्यसमुत्तुङ्गस्सर्वरक्षकरक्षकः ॥ ॥ १०८ ॥

एवमष्टोत्तरशतानर्घनामस्तुतिश्शुभा ॥
श्रीमत्सुन्दरजामातृमुनिनामावळीं मुदा ।
सदा चिन्तयतां गेहे सर्वसंपद्ध्रुवा ध्रुवा ॥

श्रीमद्वरवरमुनये नमः ॥

---

# ॥ मङ्गलाशासनस्तोत्रम् ॥

श्रीमते रम्यजामातृमुनीन्द्राय महात्मने । श्रीरङ्गवासिने भूयान्नित्यश्रीर्नित्यमङ्गलम्॥

इत्येतत्पद्यरत्नस्थवर्णानुक्रमशोभिताम् । रचये रम्यजामातृमुनिमङ्गलमालिकाम् ॥

श्रीरामानुजयोगीन्द्रदर्शनोद्धारकारिणे ।
श्रीमते रम्यजामातृमुनिवर्याय मङ्गलम् ॥ ॥ १ ॥

मय्येव करुणां नित्यमप्रमेयां वितन्वते ।
मनीषिभिरुपास्याय महाचार्याय मङ्गलम् ॥ ॥ २ ॥

तेजोराशिमयं स्वीयं दिव्यमङ्गलविग्रहम् ।
आविष्कृतवते मह्यमाचार्येन्द्राय मङ्गलम् ॥ ॥ ३ ॥

रङ्गनाथसमुद्गीतमन्त्रविख्यातकीर्तये ।
रम्यजामातृमुनये चित्तभोग्याय मङ्गलम् ॥ ॥ ४ ॥

यतीन्द्रयामुनार्यादिदिव्यसूक्त्यर्थदायिने ।
यतीन्द्रप्रवणायास्तु यतिवर्याय मङ्गलम् ॥ ॥ ५ ॥

जानकीजानिमुत्सृज्य देवराजगुरुस्तु यम् ।
अर्च्यमङ्ग्यकरोत्तस्मै आचार्येन्द्राय मङ्गलम् ॥ ॥ ६ ॥

माता पिता सुहृद्भ्राता सर्वं च नियमेन यः ।
मद्वंश्यानां भवत्यस्मै महाचार्याय मङ्गलम् ॥ ॥ ७ ॥

तृणीकृतविरिञ्चादिमहैश्वर्याय योगिने ।
महते महतां वृन्दैर्महितायास्तु मङ्गलम् ॥ ॥ ८ ॥

मुदा सदा शठारातिमुखसूक्त्यर्थवर्षिणे ।
मुग्धस्मिताञ्चितास्याय मुनीन्द्रायास्तु मङ्गलम् ॥ ॥ ९ ॥

नीचानपि महोत्तुङ्गान् कुर्वते कृपया स्वया ।
निर्निमेषानुभाव्याय मुनये नित्यमङ्गलम् ॥ ॥ १० ॥

द्राघीयसीं कृपां दिव्यां दिशते मयि संततम् ।
द्राक्षापाकोक्तिदक्षाय मुनीन्द्रायास्तु मङ्गलम् ॥ ॥ ११ ॥

यत्सूक्तिलवलेशार्थवेदिनां तत्ववेदिता ।
प्रथिता मुनये तस्मै प्राज्ञभोग्याय मङ्गलम् ॥ ॥ १२ ॥

ममैव मुखतो नित्यं महतां मोददायिनीः ।
स्तुतीरुत्सृजते बह्वीः स्तुतियोग्याय मङ्गलम् ॥ ॥ १३ ॥

हालाहलनिभैरुक्तैरप्यनुद्विग्नचेतसे ।
हसदाननपद्माय मुनीन्द्रायास्तु मङ्गलम् ॥ ॥ १४ ॥

मञ्जूनि सूक्तिरत्नानि मनीषिभ्योऽनुगृह्णते ।
मान्याय महितैर्नित्यं महाचार्याय मङ्गलम् ॥ ॥ १९ ॥

नेदीयानेव वैकुण्ठो यत्पदाम्बुजसेविनाम् ।
नित्याराध्याय मुनये तस्मै स्यान्नित्यमङ्गलम् ॥ ॥ १३ ॥

श्रीमल्लोकगुरूत्तंसश्रीसूक्त्यमृतरक्षिणे ।
श्रीमच्छेषावताराय मुनीन्द्रायास्तु मङ्गलम् ॥ ॥ १७ ॥

रङ्गनाथमनोहारिदिव्यश्रीसूक्तिराशये ।
रम्याय योगिराजाय रम्यगात्राय मङ्गलम् ॥ ॥ १८ ॥

गतागतजुषां पुंसां संसारमरुकानने ।
शरणाय मुनीन्द्राय शरण्यायास्तु मङ्गलम् ॥ ॥ १९ ॥

वारणाचलनाथस्य मङ्गलाशासनं मुदा ।
वितन्वानाय मुनय विद्वद्भोग्याय मङ्गलम् ॥ ॥ २० ॥

सितपक्षेन्दुवन्नित्यं समिन्धानसुकीर्तये ।
सार्वभौमाय यमिनां सुन्दरार्याय मङ्गलम् ॥ ॥ २१ ॥

नेत्रे सत्संप्रदायस्य दात्रे सर्वार्थसंपदाम् ।
पात्रे भवाब्धिमग्नानां त्रात्रे मे नित्यमङ्गलम् ॥ ॥ २२ ॥

भूयसां श्रेयसां राशिं भूयोभूयः प्रयच्छते ।
भूजुषां भाग्यरूपाय भूयादार्याय मङ्गलम् ॥ ॥ २३ ॥

यामुनार्ययतीन्द्रादिहृदयाम्भोजभानवे ।
धेनवे सूक्तिदुग्धानां मम दैवाय मङ्गलम् ॥ ॥ २४ ॥

निधिवन्नित्यभोग्यानां श्रीसूक्तीनां ततीरिह ।
विश्राणितवते विश्वविद्याभिज्ञाय मङ्गलम् ॥ ॥ २५ ॥

मत्तैर्बहुभिरप्यन्यैरलभ्यां भक्तिसंपदम् ।
मह्यं दत्तवते प्रेम्णा माननीयाय मङ्गलम् ॥ ॥ २६ ॥

श्रीवाग्भूषणसच्छास्त्रमहार्थामृतवर्षिणे ।
श्रीमत्कान्तोपयन्त्राख्यजीमूतायास्तु मङ्गलम् ॥ ॥ २७ ॥

निरयान् विविधान् गन्तुं सन्नद्धानपि चक्षुषा ।
वीक्ष्योज्जीवयते विद्योदन्वते नित्यमङ्गलम् ॥ २८ ॥

यदृच्छया स्वनामानि कथञ्चिद्वदतामपि ।
अघानि हरते भूयादाचार्येन्द्राय मङ्गलम् ॥ २९ ॥

मंदानामप्यमन्दानां शुद्धधीभक्तिसंपदाम् ।
अद्वेषमात्रतो दात्रे मुनीन्द्रायास्तु मङ्गलम् ॥ ३० ॥

गतिर्गम्यं मुमुक्षूणां यस्यैव चरणौ सताम् ।
तस्मै सुन्दरजामातृमुनिवर्याय मङ्गलम् ॥ ३१ ॥

लक्ष्मणार्यावतारश्रीलक्ष्मणा भूषितात्मने ।
सौम्यजामातृमुनये नित्यश्रीर्नित्यमङ्गलम् ॥ ३२ ॥

मङ्गलाशासनस्तोत्रमिदं वरमुनीशितुः ।
शृण्वतां वदतामस्तु नित्यश्रीर्नित्यमङ्गलम् ॥

इति श्रीकाञ्ची प्रतिवादिभयङ्कर
अणङ्गराचार्य विज्ञापितं
श्रीवैष्णवसौभाग्यं समाप्तम् ॥

९१६

॥ श्रीः ॥

## श्रीमद्वरवरमुनीन्द्रविषयकानि स्तोत्राण्येतानि;—



श्रीशैलेशदयापात्रस्तोत्रम्

श्रीवरवरमुनिवैभवस्तोत्रम्

श्रीमद्वरवरमुनिस्तोत्ररसायनम्

श्रीशैलेशदयापात्रमङ्गलाशासनम्

श्रीमद्वरवरमुनिकर्णामृतम्

श्रीवरवरमुनिनक्षत्रमाला

श्रीवरवरमुनिवारमाला

श्रीवरवरमुनितिथिमाला

श्रीवरवरमुनिपक्षमाला

श्रीवरवरमुनिमासमाला

श्रीवरवरमुन्यृतुमाला

श्रीवरवरमुन्ययनमाला

श्रीवरवरमुनिसंवत्सरमाला

श्रीवरवरमुनिसहस्रनामस्तोत्रम्

श्रीवरवरमुन्यष्टोत्तरशतनामस्तोत्रम्

श्रीवरवरमुनिमङ्गलाशासनस्तोत्रम्

श्रीमद्वरवरमुनीन्द्रविजयमाला.

---